॥ दीधिति ॥

तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधिति समाप्ता ।

* गादाधरी *

*निर्व्वाहादिति भाव । तदभाव = बाधादिनिश्चयाभाव , तत्र = शाब्दबुद्धौ ।* यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम् , तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणासम्भवात्तन्नैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्व्वानुभवसिद्धत्वादिति भाव ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृति समाप्ता ।

* चन्द्रकला *

योग्यतासंशयस्य माह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणाद्यात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रह । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गाऽसाधारणदोषत्वम् उपनीतप्रत्यक्षं प्रति तस्य प्रतिबन्धकत्वादित्याहदीधिति व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम् , अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य श्रीमत्स्वामिजयरामदासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध सिन्धुमहानदान्तर्वर्ति - श्रीसाधुवेलातीर्थाधीशपदवास्यप्रमाणपारावारीण-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्ति चन्द्रकला टीका समाप्ता ।

